भाग्यनगरे ११-१०-२०२२ तः १५-१०-२०२२ पर्यन्तम् आयोजित श्री वेङ्कटेश्वरवैभवोत्सव दृश्यमालिका।

अस्मिन् उत्सवे तेलङ्गाणा राज्य पालकः मान्य डा। तमिळिसै सौन्दराजन् महोदयी, ति.ति.दे. पालकमण्डलि अध्यक्षः मान्य श्री वै.वी.सुब्बारेड्डि द्वपत्यौ भागं गृहीतवन्तः।












# गीतामृतम्



एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपविषत्।
विश्रुज्य सशरं चापं शोक संविग्नमानसः।।

(भगवद्गीता ४७ -१)

भावः - रणरङ्गे तथा उक्त्वा अर्जुनः तस्य धनुर्बाणान् पार्शे विश्रुज्य, दुःखेन मनः उद्विग्नोभूत्वा रथे उपाविशत्।।

# सङ्कीर्तनम्

एवं श्रुतिमतमिदमेव त
द्द्वावैतुमतः परं नास्ति ।।एवं।।
अतुलजन्म भोगासक्तानां
हितवैभव सुखमिदमेव
सततं श्रीहरिसङ्कीर्तनं त
द्व्यतिरिक्तसुखं वक्तुं नास्ति ।।एवं।।
बहुलमरणपरिभवचित्तानां
इहपरसाधनमिदमेव
अहिशयनमनोहरसेवा त
द्विहरणं विना विधिरपि नास्ति ।।एवं।।
संसारदुरितजाड्यपराणां
हिंसाविरहितमिदमेव
कंसांतकवेङ्कटगिरिपतेः प्र
शंसैव पश्चादिह नास्ति ।।एवं।।

(अन्नमाचार्यसङ्कीर्तनम्)



# गीता "मार्गः"

मार्गशीर्षं एकः विलक्षणमासः। मार्गशीर्षम् इति उच्यते चेत् मार्गेषु श्रेष्ठम्, उपयोगकरम् इति अर्थः। एषः श्रेष्ठः मार्गः कः इति चेत् भगवत प्रतिपादितमार्गः। शीर्षप्रायः एषः मार्गः एव प्रधानमार्गः। एषः मासः प्रामुक्यतां, पवित्रामपि विद्यते। श्रीमहाविष्णोः प्रीतिकरमासः मार्गशीर्षः। "वृहत्साम तथा साम्नां गायती छन्दसामहम्  मासानां मार्गशीर्षोऽम् ऋतूनां कुसुमाकरः" इति श्लोके मार्गशीर्षः अहमेव, षट् ऋतूनां पुष्पसौरभम् अहमेव छन्दसां गायत्रीछन्दः, अदिकशोभायुक्तः वसत कालः अहमेव इति साक्षात् श्रीकृष्णायरमात्मा भगवद्गीतायां विभूतियोगे उक्तवन्तः। मार्गशिरमासः अहमेव इति उक्तवन्तः परमात्मा। हिन्दूनां परिवत्रग्रन्थः "भगवद्गीता" अस्मिन् मासे एव उद्भूता। मार्गशिरशुद्ध एकादश्यां, गीताजयन्ती पर्वदिनः प्रचलति।चान्द्रमान साम्प्रदायानुसारं मृगशिरनक्षत्रेण सह पौर्णिम तिथ्यां चन्द्रः उदेति तं मासं मार्गशीर्ष मासः इति कथ्यते। एषः मासः विष्णुस्वरूपः। एषः मासः प्रकृतिकान्तायाः सीमन्तमिव प्रकाशते। श्रीमहाविष्णोः अत्यन्तप्रीतिकरमासः। भगवद्गीतायां विभूतियोगे भगवान् श्रीकृष्णः मासानां मार्ग शीषोऽहम्" इति उक्तवान्। मार्गशिरमासे सूर्योदयात् पूर्वं शीतजलेन स्नानं करोति चेत् शीतवाधा न भवति। ब्राह्मीमुहूर्ते काले अग्निः सूर्यः मिलित्वा भवन्ति इति शास्त्रं वदति। अतः ब्राह्मीमुहूर्ते स्नानकरणं अतीव आरोग्यप्रदं सन्ध्यावन्दनं जपध्यानादयः करोतिचेदपि सूर्यस्य शक्तिः, अग्नेः तेजः अपि मनः बुद्धिम् अपि विकासयन्ति। अतः एव मार्गशिरमासे धनुर्मासप्रारम्भात् अपि प्रातः काले उत्थाय स्नानं करिष्यन्ति। एतदेव आचाररूपेण आगच्छति। एतस्मिन् मासे प्रथमदिने नद्यां स्नानं कृत्वा लक्ष्मीसमेत महाविष्णुं स्मृत्वा नद्यां दीपं त्यजन्ति चेत् आरोग्यम्, ऐश्वर्यम् सम्भवन्ति।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका




# डिसेम्बर् २०२२


सम्पुटिः-०९ सञ्चिका-०९

श्रीशुभकृत्संवत्सरस्य मार्गशिरकृष्णाष्टमी तः
श्रीशुभकृत्संवत्सरस्य पुष्यशुक्लदशमीपर्यन्तम् - १९४४



## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-






मुखचित्रम् – श्रीगोदादेवी अलङ्कारे श्रीमलयप्पस्वामी।
अन्तिमरक्षापुटः – श्रीपार्थसारथेः अलङ्कारे श्रीमलयप्पस्वामी।






# मासेषु मार्गशीर्षोऽहम्

- डा.विरिवेण्टि सुब्रह्मण्यः चरवाणी - ९८४८०९४८९०

मृगशीर्षेण युक्ता पौर्णशीर्षी। सा अस्मिन् मासे भवतीति मार्गशीर्षः इत्यमरटीकायां भरतः। अथवा मृगशीर्षनक्षत्रेण युक्तः कालः इत्यस्मिन् अर्थे नक्षत्रेण युक्तः कालः इत्यनेन पाणिनिसूत्रेण अण् तद्धितप्रत्यये मार्गशीर्षः इति शब्दस्य सिद्धिः।

भारतीयकालगणनानुसारं द्वादशसु मासेषु नवमो मासः मार्गशीर्षमासः। द्वादशसु मासेषु मार्गशीर्षस्यातिशयः कुतः इत्यस्य समाधानं निगदन् गीताव्याख्यात्रा वेदन्तदेशिकाचार्यवेङ्कटनाथार्येण प्रोक्तं यत् वर्षगर्भाधानकालत्वात् मासाधिदेवेषु केशवादिषु प्रथमस्य केशवस्य मासत्वात् व्रतवर्गारम्भकालत्वाच्च' इति। मार्गशीर्षमासस्य अधिदेवः केशवः वर्तते। मासेऽस्मिन् नवीनशालिवस्तुशाकादीनाम् उत्पत्तिरारभ्यते, अपि च कालेऽस्मिन् न शीताधिकां वर्तत अतोऽयं कालः सुखहेतुक इत्यतः, अपि च स्वयं केशवः पक्कसस्याढ्यत्वरुपो वर्तत इत्यतः एषः मासः केशवस्य प्रियः मास इत्यभिहितम्। एतमेवांशं मधुसूदनसरस्वतिरित्थं कथयति मासानां द्वादशानां मध्येऽभिनवशालिवास्तूकशाकादिशाली शीतातपशून्यत्वेन च सुखहेतुरहम् इति।

सन्देर्भेऽस्मिन् प्रश्नोऽयमुदेति यत् मासानां मार्गशीर्षोऽहम् इति गीतावाक्ये मासानामिति षष्ठीविभक्तिबहुवचनप्रयोगः कथं साधुरिति। तत्र समाधानम् - यतश्च निर्धारणम् इत्यनेन पाणिनिसूत्रेण द्वदशभ्यः मासेभ्यः मार्गशीर्षमासं समुदायात् एकदेशस्य पृथक्कृत्वा निर्धारणं क्रियत इत्यतः षष्टीसप्तमीविभक्त्यौ भवतः अतः मासेषु मार्गशीर्षोऽहमिति वा मासानां मार्गशीर्षोऽमिति वा साधुप्रयोगार्हमिति।

मृगशीर्ष अथवा मृगशिरा नक्षत्रस्य अपरं नाम आग्रहायणी इति वर्तते। आग्रहायणी शब्दात् मार्गशीर्षमासस्य आग्रहायण इत्यपि नामान्तरं दृश्यते।

स्कन्दपुराणस्य वैष्णवखण्डानुसारं भगवता कथितं यत् मार्गशीर्षो मासः सदैव मे प्रियं भवति, यतः यः मासेऽस्मिन् प्रातःकाले उत्थाय विधिवत् स्नानाद्युपसनां विद्धित तस्मिन् तुष्टो भूत्वा आत्मानं तस्मै समर्पयामीति। तदेवोक्तम् - ॥

**मार्गशीर्षोऽधिकस्तस्मात्सर्वदा च मम प्रियः॥**
**उषस्युत्थाय यो मर्त्यैः स्नानं विधिवदाचरेत्॥**
**तुष्टोऽहं तस्य यच्छामि स्वात्मानमपि पुत्रक॥**

महाभारतस्य अनुशासनपर्वणः १०६ आध्याये प्रोक्तं यत् 'मार्गशीर्षं तु वै मासमेकभक्तेन यः क्षिपेत्। भोजयो द्विजाञ्शक्त्या स मुच्येद्याधिकिल्बिषैः॥ सर्वकल्याणसम्पूर्णः सवौषाधिसमन्वितः। कृषिभागी बहुधनो बहुधान्यश्च जायते॥ यः पुरुषपुङ्गवः मार्गशीर्षेऽस्मिन् मासे एकभुक्तस्तिष्ठन्



स्वशक्तिमनतिक्रम्य ब्राह्मणान् भोजयति सः नीरोगस्सन् सर्वपापैः प्रमुच्यते। अपि च सर्वविघान् कल्याणान् प्राप्नुवन् अन्नफलादिबहुप्रकारकाः ओषधीः प्राप्य कृषिप्रधानं जीवनं यापयन् सम्पद्भिराढ्यो भविष्यतीति। अमुमेवाशं स्कन्दपुराणदिशा पर्यालोचयाश्चेत् यः एतं मार्गशीर्षमासम् एकभुक्तस्सन् व्यावर्तयति स्वशक्तानुसारं ब्राह्मणान् भोजयति सः सर्वरोगैः मुक्तो भवतीति ज्ञायते। तदेवोक्तम् - मार्गशीर्षं समग्रं तु एकभुक्तेन यः क्षिपेत्। भोजयेद्यो द्विजान्मत्त्या स मुच्येद्याधिकिल्बिषैः'।।

शिवपुराणस्य विश्वेश्वरसंहितायां मार्गशीर्षमासे अन्नदानस्य सर्वादिकं महत्त्वमित्थं प्रदत्तम्। "मार्गशीर्षेऽन्नदस्यैव सर्वमिष्टफलं भवेत्। पापक्षयं चेष्टसिद्धिं चारोग्यं धर्ममेव च।।" अर्थात् मार्गशीर्षेऽस्मिन् मासे अन्नदानकर्तॄणां सम्पूर्णाभीष्टफलप्राप्तिः पापक्षयश्च भविष्यतीति।

मार्गशीर्षमासे मधुरापुरीनिवासस्य विशिष्टं महत्त्वं प्रदत्तं वर्तते। स्कन्दपुराणे स्वयं भगवता प्रोक्तं यत् "पूर्णे वर्षसहस्रे तु तीर्थराजे तु यत्फलम्। तत्फलं लभते पुत्र सहोमासे मदोः पुरे।।" अर्थात् तीर्थे प्रयागराजेएकसहस्रं वर्षाणां निवासेन यावत्फलं प्राप्यते तावत्फलं केवलं मार्गशीर्षमासे मधुरापुरीवासेन मेलिष्यतीति।

स्कन्दपुराणस्य वैष्णवखण्डे स्वयं भगवान् ब्रह्मा बोधितः यत्

द्वादश्यां पञ्चदश्यां वा गव्येन पयसा मम।
स्नापनं देवशार्दूल महापातकनाशनम्।।
मधुना सितया यस्तु कारयेन्मार्गशीर्षके।
स राजा जायते लोके पुनः स्वर्गादिहागतः।।
स्वर्गे लोके स जयति चन्द्रेन्द्ररुद्रमारुतान्।
क्षीरस्नानं परं श्रेष्ठं मार्गशीर्षे च पुत्रक।।
शङ्खे तीर्थोर्षेदकं कृत्वा यः स्नापयति देशिकः।
बिन्दुनाऽपि सहोमासे स्वकुलं तारयेद्ध्रि सः।।
मार्गशीर्षे भक्तिमान्यः कृत्वा शङ्खध्वनिं हि माम्।
स्नापयेत्पितरस्तस्य स्वर्गे तावत्प्रतिष्ठिताः।।
शङ्खे तोयं समादाय यः स्नापयति मां सुत।
नमो नारायणेत्युक्त्वा मुच्यते सर्वकिल्बिषैः।।

कोष्ठीप्रदीपाख्ये ग्रन्थे उक्तं यत् मासेऽस्मिन् प्राप्तजन्मा तीर्थप्रवासादिषु मतिमान् भविष्यतीति, परोपकारी, साधुवृत्तिपरायणः, मद्वृत्तियुक्तः ललनासु अभिलाषी सन् जीवनं यापतीति। तद्यथा "यस्य प्रसूतिः खलु मार्गमासे तीर्थे प्रवासे सततं मतिः स्यात्। परोपकारी धृतसाधुवृत्तिः सद्वृत्तियुक्तो ललनाभिलाषी।।"

शिवपुराणे उक्तं यत् मार्गशीर्षमासे रजतखण्डस्य दानकरणे वीर्यवृद्धिर्जायते इति।

मार्गशीर्ष-शुक्ल-पञ्चम्यां तिथौ श्रीरामस्य विवाहः संवृत्तः इति ज्ञायते। अस्मिन्नेव मासे सप्तर्षीणां वाचनान्युपलक्ष्य हिमवान् पर्वत्याः उद्वाहो करणीयः इति निश्चितः इति शिवपुराणस्य रुद्रसंहितायाः



पार्वतीखण्डात् ज्ञायते। अतो हेतोः मासस्यास्य पञ्चमीतिथियुक्तं दिनमिदं विवाहपञ्चमीति नाम्ना व्यवहरन्ति। भविष्यपुराणस्य उत्तरपर्वणि श्रीकृष्णः उवाच यत् मार्गशीर्षमासस्य पञ्चमीतिथिं श्रीपञ्चमी इति कथनीयं यः तस्मिन् लक्ष्याः निवासः भवतीति।

मार्गशीर्षस्य आष्टम्यां तिथौ कालभैरवस्य सन्निधाने उपवासं कृत्वा जागरणं य आचरति सः सर्वपापैः प्रमुच्यते इति काशीखण्डे कथितम्। तदित्तम् - मार्गशीर्षसेताष्टम्यां कालभैरवसन्निधौ। उपोष्य जागरं कर्वन्सर्वपापैः प्रमुच्यते।

मार्गशीर्षे मासे आचरणीयानि पर्वाणि - प्रत्येकस्मिन् मासे सामान्यरूपेण पञ्चपर्वाणि भवन्ति। विष्णुपुराणे उक्तं यथा - चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्व्वाण्येतानि राजेन्द्र! रविसङ्क्रमणं, अष्टमी, चतुर्दशी, अष्टमी, पूर्णिमा, अमावास्या इत्येते पर्वाणि कथ्यन्ते। दिवसेष्वेतेषु स्त्रीगमन-मांसभक्षम-सम्भोगादीनि न करणीयाणि। एवमाचरितः सः पुमान् नरकं गच्छतीति निगदितम्। इत्थमेव पर्वस्वेतेषु कर्त्तव्याकर्त्तव्यानि ब्रह्मपुराणे प्रोक्ते यथा द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु।। अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्। यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्। सूर्यचन्द्रग्रहणावसरे स्नान-श्राद्ध-दान-जपाचरणं यः प्रसन्नात्मा तिष्ठति अपि च तस्माद्यत् फलं लभ्यते तदक्षयं भवतीति। पैठीनसभाष्ये तिथ्यादितत्त्वमित्थं निगदितं यत् पर्वस्वेतेषु तैलसंस्कारः क्षौरकर्म मांसभक्षणं न कुर्यात् अपि च हरितं किमपि न छन्द्यात् इति।

मार्गशिरमासस्य शुक्लपक्षस्य पञ्चमीतिथौ नागपञ्चमीति, षष्ठीतिथौ सुब्रह्मण्यषष्ठी अथवा स्कन्दषष्ठीति, शुक्लपक्षस्यैकादशीतिथौ गीताजयन्तीति, पौर्णमातिथौ दत्तजयन्तीति पर्वाणि आचरन्ति। मासेऽस्मिन् धनुर्मासस्य आरम्भः अपि भवति।

मार्गशीर्षमासे विश्वेदेवानां पूजनमर्चनं च साधनीयमिति प्रोक्तम्। मासेऽस्मिन् श्राद्धकृत्यं कथमाचरणीयमिति शब्दकलपद्रुमे सविवरणं प्रोक्तं वर्तते। तद्यथा - अत मार्गशीर्षकृत्यम्। आश्विनशुक्लपक्षे नवान्नश्राद्धाकरणे मार्गशीर्षस्य विंशतिदण्डाधिकत्रयोविंशतिदिनाभ्यन्तरे शुक्लपक्षे तच्छ्राद्धं कर्त्तव्यम्। तत्र मार्गशीर्षस्य विंशतिदण्डाधिकरप्रथमदिनत्रयेतरेषु नक्षत्रेषु श्राद्धं तच्छेषभोजनञ्च कुर्य्यात्। श्राद्धानधिकारिणा तु प्रागुक्तकाले देवादिभ्यो नवान्नं दत्त्वा भोक्तव्यम्। किन्तु अश्लेषाकृत्तिकाज्येष्ठामूलापूर्व्वभाद्रपदकेषु अपि नवान्नभोजनं न कर्त्तव्यम्। ततः एवम् - द्ध्याज्यसंयुक्तं नवं विप्राभिमन्त्रितम्। मन्त्रानादेशे गायत्रीति गायत्र्यभिमन्त्रितम्। नवमन्नं ब्राह्मणानुज्ञां गृहीत्वा प्राश्नीयात्। नूतनधान्यासम्भवे पुरातनेनापि श्राद्धं कर्त्तव्यम्।। वृश्चिकस्यरवौ शुक्लचतुर्द्दश्यां सौभाग्यकामः पाषाणाकारपिष्टकैर्देवीं पूजयत् तदपि भक्षपेन्नक्तम्।। अग्रहायण्यां पौर्णमास्यां पार्व्वणविधिना श्राद्धमावश्यकम्।। भविष्यपुराणे उक्तं यत् ''रोहिण्या प्रतिपद्युक्ता मार्गे मासि सितेतरा। गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा।।''



# अक्टोबर्

## लघुप्रश्नोत्तरी

### समाधानानि

| | |
|---|---|
| १. युधिष्ठिरः | ९. अष्टादश दिनानि |
| २. वेदव्यासेन | १०. सुधामः |
| ३. श्री महा विष्णोः | ११. वललः |
| ४. द्रौपदीम् | १२. सैरन्द्री |
| ५. माण्डवी | १३. भीष्म पर्वे |
| ६. अङ्गदः | १४. विभीषणः |
| ७. दशरथः | १५. विश्वामित्र |
| ८. जनकः | |



# भवसागरतरणी - भगवद्गीता

डा- वै.नागेन्द्रम्मा
चरवाणी - ८९१९५३८०४०

श्रीमद्भगवद्गीतायां भवसागरे मग्नाः मानवाः कथं तरन्तीति सुष्ठु वर्णितम्। अष्टादशाध्यायशोभिता, सप्तशतसमन्विता भगवद्गीता प्रधानतया कर्म-भक्ति-ज्ञानत्रयं वर्णयति। सत्कर्मद्वारा भक्तिः ,भक्त्या ज्ञानं जायतेति ज्ञातुं शक्यम्। लोकहिताय कृतं कर्मैव सत्कर्मेत्युच्यते। तदापि कर्म कर्मत्यागेन शोभते। अपि च तत् कारणं, निषिद्धं न स्यात्। तदानीमेव कर्म न बध्नाति। तदर्थमेव गीताचार्यः वदति-कर्मण्येवाधिकारस्ते ... इति। यदि वयं फले सक्त भवेम कदाचित् तादृशं फलं अप्राप्य दुःखमनु भवामः। यदि यथाशक्ति प्रयत्नं कृत्वा फलं दैवार्पणं कुर्मः तर्हि किमपि वा फलं भवतु दुःखं, मनसः क्षोभा च न भवत्येव। एवं सत्कर्माचरणेन चित्तशुद्धर्भवति कर्म विना ज्ञानं न लभ्यते। प्रथमं तावत् हृग्दतोषा दूरीकरणीयाः। अपि च आत्मशोधनं करणीयम्। गीताचार्यः कर्मणः विषये एवं वदति - ''योगस्यः कुरु कर्माणि... इत्यत्र किं कर्म करणीयं, तदपि कर्म कथं करणीयमिति ज्ञात्वा (करणीयम्) करणीयमिति सुस्पष्टमस्ति। अपि च नियतं कुरु कर्मत्वम् इत्यस्मिन् शास्त्रिविहितमेव कर्म करणीयमिति ज्ञायते। एवमेव कर्माचरणं विना आत्मस्तिर्यातं न प्राप्नोतीति विदितम्। पुनश्च ''कर्मणैवहिसंसिद्धिमस्तिथाता जनकादयः इत्यास्ति जनक अस्तयेषु भगीरदादि राजानः निष्कणं कर्म कृतवन्त।



अन्तं ज्ञानं प्राप्य मुक्तिंगताः। यतो हि ज्येष्ठाः यदि या कर्मानुष्ठानं कुर्वन्ति कनिष्ठा अपि तानेवानुसरन्ति। ज्येष्ठा आदर्शप्राया भवेयुः। अत एव यद्यदाचरतिश्रेष्ठः तत्तदेवेतये जनः इत्युक्तवान् श्रीकृष्णः। पुनश्च भगवान् एवं वदति यत् अहमपि कर्म करोमि। ''न मे पार्थास्ति कर्तव्यम् त्रिषु लोकेषु किञ्चन गयापि किमर्थं कर्म करणीयमित्युक्ते मया क्रियते चेत् सर्वे मामनुसृत्य कर्म कुर्वन्ति। तदपि कर्म निदकामं,निरहङ्कारंस्यात्।

एवं रूपेण सत्कर्मानुष्ठानं कृत्वा तद्वारा भक्तिः प्राप्तव्या। भगवद्भक्तिविषये नैकेषु सन्दर्भेषु गीताचार्य उपदिष्टवान् - ''भक्त्या मामभिजानाति... भक्तिं मयि पयं कृत्वा ''भक्त्या तु अनन्यया शक्यः इत्येवं रूपेण गीताचार्यः बहुषु सन्देर्भेषु भक्त्याः वैशिष्ट्यं परमुद्गोषितवान्। भगवति भक्तरेव प्राधान्यमावहति। न तु तत्र वंश, मत, लिङ्गादिकम्। चण्डालोऽपि स्यातस्मिन् यदि अनन्यभक्तिर्भवति सः ममेष्टः इति वदति श्रीकृष्णः।

एवं भक्तिमार्गेण सत्यवस्तु ज्ञात्वा नाम ज्ञानं प्राप्य मुक्ता भवन्ति मानवाः। अधुनातेऽपि काले मुक्तिंगतानां महात्मनां विषये वयं जानीमः। उदाहरणायं - (यागय्या यागराजादयः एते सर्वेऽपि भक्त्या ज्ञानं प्राप्तवन्तः। इदं शरीरमशास्वं वयं सर्वे आत्मस्वरूपाः आत्मनः नाश एव नास्तीति परमं सत्यं ज्ञात्वा मुक्ता अभूवन्। सोक्रटीस् महाशयः कारागारे यदासीत् तदा शिष्य आगत्य श्वः भवन्तं कयंचिदितो नयाम इत्युक्तवन्तः। तदा सः मम मृत्युरेव नास्तीत्युक्तवान्। तदा शिष्याः श्वः भवतां कृते विषं दत्वा मारायिष्यन्ति। अतः भवतां मृतशरीरं खननं कुर्मः उत दहनं इति पृष्टवन्तः। तदा सोक्रटीस् महाशयः मां यस्मीकर्तुं वा खननं कर्तुं वा न शक्नुवन्तीति विवृतवान् यतो हि तस्य मनसि एषा भावनासीत् अच्छे द्योऽयमदाहयोऽयं इति।

आत्मानं कोऽपि किमपि कर्तुं न शक्नुवन्ति एवं भक्त्या देवस्योपरि विश्वायं कृत्वा तस्य स्वरूपं विज्ञायात्मानन्दमनु भवन्ति।

गीताचार्यः ज्ञानिनः विषये एवं वदन्तिः ज्ञानीत्वावैव मे मतम्। ज्ञानवान् मानव साज्ञात परमात्मैव। पुनश्च 'ज्ञानं' लब्ध्वा पयं शान्तिमयिरेणाधिगच्छतीति बोधयति। ज्ञानेन सत्वरं परा शान्तिः लभ्यते। ततः परमावश्यकं किमस्ति जीवने। केवलकर्मणा केवलभक्त्या केवलज्ञानेनापि मुक्तिं प्राप्तुं शक्यमेव किल? इति सन्देशे भवति कदाचित्। परन्तु सत्कर्म अथवा निष्कामकर्म भक्तिः ज्ञानं एतत्त्रयमपि मुक्तिभवनं प्राप्तमावश्यकमेव। मुक्ति भवनमारोढुं प्रथमं गीताभवनप्रवेश अत्यावश्यकः। यताहि भवनम् इत्यत्र 'भ' यदि नास्ति वनमेवावशिष्यते। यदि वयं जीवनं गीताविषयकं ज्ञानं न प्राप्स्याम तर्हि जीवनं निरर्थकमेव भवति। अतः सर्वे वयं भगवद्गीतां पठामः तदनुगुणमाचरामः मुक्तिं प्राप्ययामः।

**मत्कर्मकृग्मपरमो मद्भक्तरसङ्गवणितः**
**निकैरस्सर्वभूतेषु यस्समामेति पाण्डव॥**



# तिरुप्पावै सौरभम्

गोदादेवी श्रीकृष्णस्य अनुग्रहार्थं ''तिरुप्पावै'' व्रतं श्रीविल्लिपुत्तूरु स्थले तस्याः मित्रैः सह आचरित्वा, स्वाचरित व्रतविधानम् अस्माकं बोधितवती। सः एव ''तिरुप्पावै'' प्रबन्धः। तिरुप्पावै प्रबन्धे ३० पाशुराः सन्ति। ३० पाशुराणां भावपरिमळान् अस्माकं ''सप्तगिरिः'' पाठकानां कृते ददाति। आस्वादनं कुर्मः आगच्छन्तु...!!!!

**१.मार्गळित्तिङ्गळ्... -** हे दिव्याभरणभूषिताः कुमारिकाः! मार्गशीर्षमासेऽयं समागतः, स्नानेच्छुकाः सर्वाः समागच्छन्तु! शूलपाणेः नन्दगोपस्य नन्दनः, विशालनयनः यशोदाबालकः श्रीहरिः, मेघश्यामः, सूर्यचन्द्रसमाननः श्रीमान् नारायणः एव अस्मभ्यं ''परै'' इति उत्तमम् देवदुन्दुभिं दद्यात् इति आमुक्तमाल्यादा स्वसखीः आह्वयति।

**२. वैयत्तु -** भूलोकभाग्यभरिताः व्रतकालकुमारिकाः। श्रृण्वन्त्वस्माकं व्रतनियमम्। परमपुरुषं क्षीराब्धिनाथमेव स्तुमः। घृतं न स्वकीकुर्मः न पिबामः। उषः काले एव स्नानं कुर्मः। न दृशोरञ्जनं लिम्पामः, शिरोरुहं सुगन्धिकुसुमस्रगि भः न बध्नीमः। अकर्तव्यं नैव कुर्मो न वा दुर्वार्तां श्रावयामः। अर्थिने भूरिदानं प्रदाय उज्जीवनोपायमेव चिन्तयामः।

**३.ओङ्गि उलगलन्द... -** धनुर्मासव्रतपरायणाः। त्रिविक्रमावताररूपिणः देवदेवस्य नामसङ्कीर्तनं कुर्वत्यः यदि वयं मज्जामः, तर्हि पापं नश्यति, मासे त्रिवारं वृष्टिः भवति, मीनाः महति व्रीहीणां क्षेत्रे नृत्यन्ति, रम्येषु नीलोत्पलेषु मधुपालयः स्वपन्ति, गोक्षीरैः घटा निरन्तरं पूर्यन्ते। अनश्वराभिः संपद्भिः वसुन्धरेयं विराजते।

**४.आलिमलैकण्णा... -** हे वार्षुकबलाहक! इदमेकं कर्म कुरु यत् त्वम् अम्बुनिधेः अन्तः प्रविश्य अम्बुधरो भृशमन्तर्निष्क्रम्य भगवतः देहवत् श्यामलत्वं संप्राप्तय महाभुजस्य पद्मनाबस्य हस्ताब्जे ज्वलत् चक्रमिव गर्जनं कृत्वा, पाञ्चजन्यमिवोर्जितं विधाय, शार्ङ्गोत्थाः सुशरा इव, जगदुज्जीवनाय वर्षधाराः प्रपातय, याभिः वयमानन्देन मार्गशीर्षस्नानं विधेम।

**५.मायनै मन्नु... -** ''एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम्'' इत्युक्तप्रकारेण पावनयमुनातटे विहरन्तं गोकुलमणिदीपं, स्वजन्मना मातुरुदरं यशस्वि कुर्वाणं दामोदरमुपागम्य, कुसुमाञ्जलिभिः नत्वा वाग्भिः स्तुमः, मनसा च चिन्तयामः, तदा भूत- भविष्यत् - वर्तमानपापानि प्रणश्यन्ति, यथाग्नौ इषीकतूलम्, अतो वयं तन्नामानि भजामहे।

**६.पुळ्ळुम्... -** हे बाल! उत्तिष्ठ! पूतनास्तन्यपानभुजं, शकटासुरसंहर्तारं, क्षीराब्धौ शेषे शयानं शेषशयनं जगत्कारणं निधाय हृदये भक्त्या मुनिवरा योगिनश्चा शनैरुत्थाय हरिशब्दं कुर्वन्तः सन्ति। अनेन सर्वे प्रबुद्धाः, भवती किमर्थं न प्रबुद्धासि इति पृच्छति।

**७.कीशु कीशु... -** अपरां कन्यामुत्थापयति - ''हे भ्रान्तबाले! सर्वासु दिक्षु प्रसृतं भरद्वाजपक्षिणां विरावं न श्रृणोति किम्? गोपयोषितां माङ्गल्याभरणवलयादिविभूषणानां ध्वनिः दधिमथनघोषः न श्रूयते किम् ? हे नायकस्त्रि! नारायणावतारं श्रीकेशवं गायन्तीनाम् अस्माकं निनादं श्रुत्वाऽपि निद्राति किम्? हे तेजस्विनि! कन्ये! असु कवाटमुद्घाटय! अस्माभिस्सहागच्छतु।

तेलुगु मूलम् - डा.एम्. वेङ्कटाचार्युलु

संस्कृतानुवादः - एन् .रमेशः




**८.कील्वानम्...** - प्राभातिकचिह्नमुक्त्वा अन्यां अन्यां प्रबोधयति। हे कन्ये! पूर्वा दिक् श्वेता अभवत्। महिषाः घासग्रासाय निर्मुक्ताः। अवशिष्टानां गन्तुकामानां बालिकानां निरोधं कृत्वा भवतीम् आह्वातुमातिष्ठामः। हे कुतूहलिनि! उत्तिष्ठ! दुन्दुभीन् वादयन्त्यः गायन्त्यश्वा मुदा वयं चाणूरमल्लहन्तारं तुरगास्यविदारकं देवादिदेवं सम्प्राप्य यदि वयं सेवामहे, तर्हि सः हाहेत्यस्माकं योगक्षेमं विमृश्य परिरक्षेत्।

**९.तूमणिमाडत्तु...** - मणिमयभूते सौधे उज्वलत्सु दीपेषु धूपवासनावासितरम्यतल्पके शयाना हे मातुलनन्दिनि! कवाटस्यार्गलम् अपाकुरु! हे मातुलानि! कवाटस्यार्गलम् अपाकुरु! हे मातुलानि! तव पुत्रीं शीघ्रमेव प्रबोधय! किं सा मूका उत बधिरा वा? आहोस्वित् निद्रालसा वा? अथाव मन्त्रबद्धा वा? किं नोत्तिष्ठति? वयमधुना महामायः, माधवः वैकुण्ठः इति भगवन्नामानि बहूनि संकीर्त्य वर्तामहे।

**१०.नोत्तु...** - पञ्चमीं कन्यां प्रबोधयन्ती - हे कन्ये! वयं भगवत्संश्लेषार्थिन्यो व्रतमनुष्ठातुमतिशीघ्रेण समागताः। किं भवती पूर्वमेव व्रतमनुष्ठाय भगवत्संश्लेषरूपं स्वर्गमनुभवन्ती विद्यते वेति नस्संशयः। गेहद्वारं समुद्घाटय! अथवा तुलसीदामविभूषणः श्रीनारायणः अस्मभ्यं 'परै' इति वाद्यविशेषं दद्यादेव। हे भामिनि! किमितोऽपि निद्राति? किं कुम्भकर्णः निजां निद्रां तुभ्यं प्रदत्तवान् वा? अपूर्वाभरणायमाने! प्रबुद्धा सती तरसागत्य मणिमयकवाटमुद्घाटयतु।

**११.कत्तुक्करवै...** - षष्टीं कन्यां गोदा प्रबोधयति। सवत्सानामनन्तानां धेनूनां दोहने सदा निरतानां, शत्रुबलनाशकुशलानाम् अनवद्यगुणौघानां गोपालानां स्वर्णलते! वल्मीकस्थ - सर्पोपमनितम्बे। वनस्थमयूरोपमे! आगच्छतु! सर्वाः सख्यः भवद्गृहं प्रति संप्रविश्य मेघश्यामस्य नामानि गायन्ति। अथापि बवती अचलित्वा किमपि न भाषते? भवत्याः निद्रायाः किमुद्देश्यमिति वदतु।

**१२.कनैत्तिलम्...** -सप्तमीं कन्यां प्रबोधयति। यस्य गोपस्य गृहे महिषानामत्यधिकक्षीरस्रावेन प्राङ्गणं पङ्किलं जातं, तद्गोपानुजे सखि! अस्माकं शिरसि तुषारे पतिते सति भवद्गृहोपान्तमाश्रिताः। लङ्केश्वरस्य हन्तारं मनोज्ञवपुषं विभुं श्रीरामचन्द्रं गीयमानेऽपि भवती मूकास्ति? इयं महती निद्रा किमर्थम्? आशु प्रबुध्य आगच्छतु। भगवत्प्राप्तित्वरया न केवलं वयमेव प्रबुद्धाः। अपि तु सर्वेऽपीति भावः।

**१३.पुळ्ळिन्वाय्...** - अष्टमीं कन्यां प्रबोधयति। बकासुरमुखच्छेदकस्य, दुष्टदशग्रीवासुरसंहर्तुः, यशोराशिं कीर्तयन्त्यः कन्यास्सर्वा अपि व्रतभूमिं प्रविष्टाः। शुक्र उदितः बृहस्पतिश्चास्तं गतः, पक्षिणः कूजन्ति, हे पद्मनेत्रे! अतिशीतले जले अस्नात्वा किं शयिता? हे मृदुस्वभावे! सुदिने कापट्यं परित्यज्य अस्माभिः सह सङ्गता भवतु।

**१४.उङ्ग्ल् पुलैक्कडै...** - हे मृषावादिनि! निर्लज्ज्रे! वाचाले! पश्यतु युष्मत्गृहवाटिकायां रक्तोत्पलानि विकसितानि नीलोत्पलानि मुकुलीभूतानि सन्ति। काषायाम्बरधारिणः शुभ्रदन्ताः स्वं स्वं देवालयं प्रति गच्छन्तः सन्ति। अतः उषःकालः समागतः। आजानुबाहुं शङ्खचक्रधारिणं पङ्कजाक्षं सर्वाः वयं स्तुमः। उत्तिष्ठतु।

**१५.एळ्ळे!... -** हला सखि! बालशुके! कुतो निद्रासि सम्प्रति? हला सख्यः! झटित्येवं माऽह्वयन्तु? अहं प्रबुद्धाऽस्मि। हे सखि! चातुर्यं ते पूर्वमेव विजानीमः, एवं मा वदत्विति! हे सख्यः! समर्थाः यूयमेव, अथवा अहमेव बवेयं नाम। हे वल्लभे! शीघ्रमागच्छतु सर्वाः अपि गतवत्यः, भवती स्वयमागत्य गणनां करोतु नाम! महागजस्य हन्तारं, शत्रूणां मदनासकं, आशचर्यकरचेष्टितं श्रीशं वयं स्तुमः। आगच्छतु।



**१६.नायकनाय् निन्न... -** गोदादेवी सर्वाः सखीः प्रबोध्य ताभिस्सह नन्दगोपभवनं गत्वा तत्रत्यान् प्रार्थयते। हे गोपनायकस्य नन्दगोपस्य भवनद्वारपालक! श्रीगोपुरद्वारपालक! रत्नमयकवाटस्य अर्गलमण्सारय! तदा तैः पृष्टे ताः वयं गोपबालिकाः, अस्मभ्यं गोपवालिकाभ्यः मायावी श्रीकृष्णः ह्यः स्वयमेव ''परै'' इति वाद्यविशेषं ददामीत्यवोचत् वयं शुद्धचेतसः प्रबोधमङ्गलं गातुं प्राप्ताः स्मः, वाचा भवन्तः अस्मान् मा निवारयन्तु। भो स्वामिन! स्नेहस्थिरं कवाटं सत्वरम् उद्घाटयतु।

**१७.अम्बरमे तन्नीरे... -** नन्दगोपभवने सुप्तानां चतुर्णां प्रबोधनं कुर्वत्यः तेषां गुणगानमपि प्रस्तुवन्ति। यथा - वस्त्रं, शीतलोदकम्, अन्नं च धर्मबुद्ध्या सर्वेभ्यः यच्छन् स्वामिवाचक हे नन्दगोपाल! उत्तिष्ठ! लतोपमानानां नारीणमुत्तमे कुलदीपके स्वामिनि। यशोदे! प्रबुध्यस्व! हे त्रिविक्रमावतार! देवादिदेव। निद्रामुज्झित्य उत्तिष्ठ! हेमबूषालङ्कताङ्ग बलराम! स्वापं परित्यज्य भवन्तौ द्वावपि उत्तिष्टेताम्



**१८. उन्दु मदगलित्तन... -** नीलादेव्याः प्रबोधनं कुर्वन्त्यत्र। स्रवत्मदगजोपमस्य अपराजितदोर्वीयस्य नन्दगोपस्य स्नुषे! हे नीले! सौरभोद्भासितकुरे! कवाटमपावृणु! सर्वासु दिक्षु कुक्कुटाः शब्दायन्ते, मनोज्ञे माधवीकुञ्जे कोकिलवर्गाः सन्ततं कूजन्ति, पश्यतु, श्रुणोतु, कन्दुकोद्भासिताङ्गुले! त्वत्स्वामिनः नामानि गातुं वयमागताः। अतः भवती सौन्दर्यपूर्णकरकङ्कणेषु शिञ्जानेषु सत्सु द्रुतमागत्य रक्तोत्पलहस्तेन सानन्दं कवाटमुद्घाटयतु इति। ''नप्पिन्नैपिराट्टी'' इति नीलादेव्याः संप्रदायनाम। पुरुषकारस्वरूपिण्याः नीलादेव्याः प्रबोधनं क्रियत इति सारार्थ।।

**१९. उन्दु मदगलित्तन... -** नीला - कृष्णयोः सविशेषणं प्रबोधनमत्रक्रियते। भगवान् श्रीकृष्णः कुत्र शयानोऽस्तीति जिज्ञासायां....दीपस्तम्भेषु दीप्तेषु सत्सु गजदन्तपदाञ्चितस्य मञ्चस्य उपरि मार्दवादि पञ्चगुणभूयिष्ठस्य शयनीयस्योपरि आरुह्य प्रफुल्लकुसुमामोदितिकुराया नीलादेव्याः उरोजयोः उपरि शयान! हे विशालवक्षस्क! हे कृष्ण! वदनं विवृणु! अञ्जनाञ्चितनेत्रे! त्वं त्वद्दयितं कियन्तं कालं प्रबुद्धं न करोषि? क्षणमात्रमपि ईशस्य विश्लेषमसहमाने! हे नीले! इदं न युक्तम्? न वा तव स्वभावः।

**२०. मुप्पत्तुमूवर्... -** त्रयस्त्रिंशत्त्रिदशानां कृते पूर्वमेवाभयं प्रददत् तेषां भयनिवारक! समर्थ! जागृहि! हे आर्जवगुणवन्! बलवन्! शत्रुभ्यो दुःखदायक! पूतात्मन्! जागृहि! हे शोणविम्बाधरे! स्वर्णघटस्तनि! कृशोदरि! सर्वगुणोपेते! नीले! लक्ष्मि! सम्प्रबुध्यस्व! व्यजनं दर्पणं तव पतिं च प्रदाय अस्मान् च स्नपय इति।

**२१. एत्तकलङ्गळ्...** - क्षीरदुघाः सद्गुणशालिनीः भूयस्यः गाः निरवधिकं लब्धवतः नन्दगोपस्य सुपुत्र! वेदप्रतिपाद्य! आश्रितपक्षपरिरक्षार्थं कृतावतार! हे तेजस्विन् त्वच्छत्रवः त्वच्छत्रवः त्वत्समीपे शरणं गताः इति मङ्गलानि प्रयुञ्जानाः गोदागोपिकाश्च संप्रार्थयन्ति।

**२२. अङ्गण् मा...** - निर्गताहंकाराणां पृथिवीपालकानां सब्दोहः यथा भवतः द्वारि तिष्ठति तथा त्वद्गुणजिताः वयमागत्य उपस्थिताः। विदीर्णकिङ्किणीव, कमलारुणकान्त्या विराजमानाभ्यां नेत्राभ्याम् अस्मान् मन्दं मन्दमालोकय। युगपदुत्थितचन्द्रसूर्याविव विराजमानाभ्यामति - सुन्दरनयनाभ्याम् अस्मान् पश्यसि चेत् मोक्षप्रतिबन्धभूतं पुण्यपापरूपं द्विविदं कर्म प्रणश्यति।

**२३. मारि मलैमुळञ्जिल्...** - वर्षाकालेषु पर्वतगुहामाश्रित्य सुप्तः सिंहः यथा समुत्थाय, वीक्ष्य, गर्जयित्वा बहिः आगच्छति तथा त्वमपि शयनमन्दिरात् बहिरागत्य जयशीलं सिंहपीटमलङ्कृत्य अस्मदागमनहेतुं विचार्य कृपां कुरु।

**२४. अन्नु इव्वुलगम्....** - मङ्गलं लोकत्रयाक्रमितपादयुगलाय, सुन्दरलङ्काध्वंसकबलाय मङ्गलम्। शकटासुरभञ्जनागतक्रीर्तये मङ्गलम्। वत्सासुरवधसमयपादाय मङ्गलम्। गोवर्धनोद्धारणगुणाय मङ्गलम्। शत्रुनाशकसमर्थवेलायुदाय मङ्गलम्। इति स्तोतुकामा वयमिहागताः। कृपां कुरु।

**२५. ओरुत्ति....** - निशायां देवकीगर्भादवतीर्य, तस्यामेव निशि यशोदामश्रित्य जिघांसतः कंसस्याबिप्रायमन्यथा कृत्वा, तस्य जठरे अग्निरूपेण स्थितवान्। आश्रितवत्सल! ''परै'' वाद्यं प्रार्थयामहे! श्रियः पतित्वोचितसंपदः वीरचरित्राणि च स्तुत्वा खेदापगमेन मोदामहे।

**२५. ओरुत्ति...** - निशायां देवकीगर्भादवतीर्य, तस्यामेव निशि यशोदामश्रित्य जिघांसतः कंसस्याबिप्रायमन्यथा कृत्वा, तस्य जठरे अग्निरूपेण स्थितवान्। आश्रितवत्सल! ''परै'' वाद्यं प्रार्थयामहे! श्रियः पतित्वोचितसंपदः वीरचरित्राणि च स्तुत्वा खेदापगमेन मोदामहे।

**२६. माले...** - आश्रितवत्सल! नीलतनो! वटपत्रशायिन्! मार्गशीर्षव्रतावरणार्थं सुघोषयुक्तं पाण्डुरशङ्खं, ''परै'' इति वाद्यविशेषं, मङ्गलदीपं, ध्वजं, वितानं, स्तोत्रपाटकान् च अस्मभ्यं देहि।

**२७. कूडारै ...** - शत्रुनाशक! गोविन्द! प्रभुं त्वां स्तुत्वा अभीष्टं 'परै' इति वाद्यविशेषं प्राप्य लोकमान्यानि आभराणि धृत्वा, अनर्घवस्त्राणि परिधाय, घृतक्षीरादि संस्कृतं मधुरं पायसं भवता सह आस्वादयामः।

**२८. करवैगळ् ...** - ज्ञानलेशविहीना गोपा वयम्। तव अवतारवशात् भाग्यशालिनः। समस्तहेयरहित! गोविन्द! भवतः अस्माकञ्च विद्यमानः सम्बन्धः वार्यमाणोऽपि दुर्वारः। बालैरस्माभिः स्नेहवशात् कृतानपराधानविगणय्य अस्मदभिलषितं व्रतोपकरणं प्रयच्छ।

**२९. शित्तं शिरुकाले...** - प्रत्यूषे तवपादपद्मस्तुतेः तत्त्वार्थं शृणु। पशुपोषणोपजीविनाम् अस्माकं कुले समुत्पन्नस्य तवैव वयम् अनन्यदासाः। भवतानुग्रहीतं वाद्यं प्राप्य प्रतिनिवर्तिन्यः न। सप्त-सप्त-जन्मस्वपि तवैव कैङ्कर्यं करवाम। विषयान्तरस्पृहां निवर्तय।

**३०. वङ्गक्कडल्...** - गोपिकासङ्घेन अनुभूतानि, विष्णुचित्तात्मजया द्रविडभाषायामुपनिबद्धानि स्तुतिपद्यानि अविहाय ये पठन्ति ते दोश्चतुष्टयमण्डितस्य, रक्तान्तनेत्र शोभितवदनारविन्दस्य गोविन्दस्य श्रियः पतेः अनुपमानकृपापात्राः भूत्वा इहपरसौख्यम् अनुभवन्ति।



।। गोदायै नित्यमङ्गलम्।।

SIVAPRASAD

# धनुर्मासमाहात्म्यम्

- श्री के.जि.महेश् चरवाणी - ९४८०९०२१६१

धनुर्मासः विशेषरुपेण विष्णुमन्दिरेषु वहुवैभवेन आचर्यते। उषः काले मन्दिरेषु अर्चना, प्रार्थना, पूजादिकं निवेद्य विशेषेण भगवन्निवेदनानन्तरं बालेभ्यः निवेदितं प्रसादं प्रदीयते। एषः 'बालभोगः' इति विश्रुतः।

सूर्यः मकरराशिं प्रविश्य सङ्क्रान्तेः पूर्वदिनं यावत् तत्रैव निवसति, एषः कालः धनुर्मासत्वेन समाचर्यते। धनुर्मासे मन्दिरेषु उत्सवस्य वातावरणं दृश्यते। वैष्णवाः विशेषेण पूजादिकं श्रद्धया परम्परा प्रकारेण परिपालयन्ति। गोदादेवीं आधनुर्मासं सङ्कीर्तयन्ति। धनुः सङ्क्रमणदिने पूजाः जपतपांसि पुण्यस्नानानि द्विगुणितं फलं यच्छन्ति। सूर्यदेवालयानां विष्णुमन्दिराणां दर्शनं पुण्यावहं भवति।

परमपावनं धनुर्मासं भवति। देवालयेषु आगमविहितपूजादि कैङ्कर्यं, स्थानिक आचार व्यवहाराः सम्प्रदायनिष्टक्रमाः धनुर्मासपूजाविधि प्रतिपदं परमात्कृष्टं कुर्वन्ति। अण्डालम्म पूजा तिरुप्पावै पठनं, गोदाकल्याणं, तत्रापि शुष्कमरीचनिर्मित 'पोंगल प्रसादाः भक्तानां बहवाकर्षयन्ति। एषः द्रविडदेश सम्प्रदाय इति प्राज्ञा कथयन्ति। कलियुग वैकुण्ठे तिरुमलगिरौ एतस्मिन् मासे सुप्रभातस्य स्थाने तिरुप्पावै गायन्ति। सहस्रनामर्चनायां तुलसीदलानां स्थाने बिल्वपत्राणि उपयुज्यन्ते। शयने श्रीकृष्णः समर्चितो भवति। एतादृशं भव्य सम्प्रदायं तिरुमलक्षेत्रे पश्यामः।



**ब्रह्मी मुहूर्तपारायणम्** - अस्मिन् मासे उषःकाले ब्राह्मीमुहूर्ते एवं सायङ्काले गोधूलिमुहूर्ते गृहं स्वच्छं स्थापनेन महालक्ष्म्याः दिव्यानुग्रहः प्राप्यते। दरिद्रता नश्यति। ब्रह्मी मुहूर्ते ये दैवपारायणं कुर्वन्ति ते दैवानुगृहीताः भविष्यन्ति इति शास्त्रवचनम्। भूदेव्या अवतारः एव 'अण्डाळ्' तथा रचितं दिव्यप्रबन्धम् एव तिरुप्पावै। द्रविड भाषायां 'तिरु नाम पवित्रं श्री पावै नाम व्रतम्। प्रबन्धं वेदोपनिषदां सार एव तिरुप्पावै। उपनिषद गोदादेव्याः सुखकमलनिसृतानि सर्वजनान् प्राप्तुं विष्णुपादप्राप्तये। एतस्मिन् मासे पञ्चदशदिनानि



मधुसूदनम् आराद्य गुडोदनां, पोंगल् तदनन्तर पञ्चदशदिनानि दध्योदनं, पोंगल् तदनन्तर पञ्चदशदिनानि दध्योदनं प्रसादरूपेण भक्तेभ्यः प्रदीयते। कन्याः प्रातरुत्थाय गृहस्य पुरतः नागवल्लीं विरच्य विष्णुं पूजयन्ति चेत् स्वाभीष्ट पतिं प्राप्नुवन्ति। गोदादेवी अपि आधनुर्मासं विष्णुं मार्गलिव्रतरुपेण अपूजयत्।

धनुर्मासव्रतकथाम् आदौ ब्रह्मणा महर्षि नारदाय समाख्यातम्। धनुर्मास सम्बद्धाः विषयाः ब्रह्माण्डपुराणे, आदित्यपुराणे, भागवते, नारायणसंहितायां च उपलभ्यन्ते। ये तावत् धनुर्मासव्रतम् अनुष्टातुम् इच्छन्ति ते स्वशक्त्या देवमूर्तिं विधाय देवतागृहे संस्थाप्य प्रतिदिनं सूर्योदयात् पूर्वमुत्थाय स्नानादि कर्माणि समाप्य पञ्चामृतेन अभिषेकं सम्पादयेयुः। अभिषेकाय शङ्खस्य उपयोगः साधुतरः भवति। तदनन्तरं तुलसीदलैः अष्टोत्तर सहस्रनाम जपपारायणैः पूजयित्वा नैवेद्यं समर्पयेयुः। आमासं विष्णुकथा पठनं श्रवणं वा कुर्युः। व्रताचरणानन्तरं सङ्कल्पित ब्रह्मचारिणे दानं यच्छन्तः इमं श्लोकं पठेयुः

**मधुसूदन देवेश धनुर्मास फलप्रद।**
**तवमूर्ति प्रदानेन मम सन्तु मनोरथाः।।**

धनुर्मासे शैत्यकारणतः उदरे जठराग्निः संवर्धते बुभुक्षा बहुतरा भवति। जठराग्निः सात्विकाहार स्वीकारात् उपशाम्यति। अतः अस्मिन् मासे पायसं दध्योदनं मुद्गं च प्रसादरुपेण सात्विकैः गृह्यते। आयुर्वेदे ज्यौतिषे च सात्विकाहार सेवनेन सत्वगुणस्य अतिशयाभिवृद्धिः भवतीति निगदितं वर्तते।

### धनुर्मासे विवाहनिषेधः -

रविः धनु-राशिं प्रविश्य मकरं प्रति क्रमति। अयं समयः धनुर्मासः। धनु-मीन राशौ रविः भवति बृहस्पतिना विद्यते तदा शुभकार्याणि न समाचरितव्यानि। सम्पूर्णमासे उत्सवस्य वातावरणं निर्मीय ससन्तोषं विष्णुम् आराधयेयुः।



# आण्डाल् अविरळ भक्तिः

आर्.अनन्तकृष्णशर्मा
चरवाणी - ८९७८५८७७५१

आण्डाल् स्व परमभक्तिपरवशेन भगवन्तमेव वरणंकृत्वा, धन्या अभूत्। तस्याः पाशुरेषु सुमधुर गीतानि दृष्ट्वा तस्याः भगवन्तं प्रीतिः दृश्यते।

आण्डाल् भगवन्तम् उन्मत्तप्रेमंप्रदर्शितवती कथञ्चिदपि स्वामिनः पार्श्वे आगमनं, तेन सह समागमनमेव तस्याः आशयः। ''श्वेतवर्णशङ्खं धृत्वा अट्यमान कृष्णः मम दृष्टौ न आयाति, मम हृदयं चौर्यं कृत्वा मामेव दुःखं कारयति। मम सर्वस्वं सः एव पिक! मृदुमधुर गानं कुरु पिक! मम प्रियः, इष्टदेवस्य गानं कुरु!'' इति पिकानां प्रति प्रार्थयति।

अन्तिमे तावत् सः श्रीकृष्णः स्वीकर्तुमङ्गीकृतवान्। तथापि तेन पित्रा विवाहस्य कार्यक्रमं करणीयं, एवमेव सः अलौकिकतया स्वप्रिय पुत्रीं कथं वा प्रेषयति? देवेभ्यः आगतम् उपायनं वोढुमशक्तः सन् समयम् अग्रे नयति। अत्र तु आण्डाल् (विलम्बं) असहमाना मेघैः तदितरद्रव्यैः च स्वामिनः प्रति दौत्यं प्रेषयति।




एकादश पाशुरयुक्त एकस्मिन् गीते आण्डाल् स्व सौन्दर्यस्वरूपं वर्णयति। तस्मिन् स्वामिना सह स्व विवाहस्य प्रत्येक कार्यक्रमस्य बहुविशदीकृत्वा स्व भावनया बहु सुष्ठुतया प्रतिपादितवती। एवं रूपी पाशुराणां श्रवणेन विवाहः मनसि दृश्यते। दक्षिणादौ एतं सन्निवेशं प्राचुर्यं प्राप्तम्। विवाहादिषु अधुनाऽपि गानं सम्प्रदायेन आगच्छति। दिव्यप्रेम विषये अद्यापि आण्डाल् प्रेमस्यैव उत्कृष्टं स्थानं भजते। कविता वास्तविकतायाः कृते सरस - लीलाः तेषु गीतेषु स्थानं प्राप्तवत्यः। आण्डाल् देव्याः रचना ''तिरुप्पावै''। तिरुप्पावै बहु प्रसिद्धः ग्रन्थः वर्तते दक्षिणभारते। तस्मिन् ३० पाशुराः वर्तन्ते। एकैकस्मिन् अष्ट पंक्तयः भवन्ति। एतेषां गानं कन्यकाः प्रभातवेलायां कुर्वन्ति। तमिलनाडु प्रान्ते इदानीमपि अस्य आचारः प्रचलति। ग्रामस्थ कन्यकाः सूर्योदयात् पूर्वमेव ब्राह्मी मुहूर्तवेलायां उत्थाय स्नानमाचर्य सुपति प्राप्तये देवमाराधयन्ति।

आण्डाल् बाल्यादेव श्रीकृष्णस्योपरि प्रेम्णा मनाऽभूत्। श्रीकृष्णस्य बाल्यकाले साऽपि गोपिका एव आसीत् इति चिन्तयति स्म। एवं रूपी उत्सव गीतानि पाशुरेषु पथे-पथे दृश्यन्ते। तासु कवितासु स्थित भाषा वैभवं, सङ्गीत विहारं अतिमधुरम्। गतस्य युगस्य पुनः स्मारको ग्रन्थः अयम्।

आत्मनः राज्ये आण्डाल् स्व वाञ्छान् अपूरयत् तस्याः नायक- नायिकायाः भावचित्रणमद्भुतम् आसीत्। तस्याः आध्यात्मगवेषणा सुमनोहरम्। अतः तमिल कविता मञ्चे तस्याः स्थानं विलक्षणम् वर्तते। सा लक्षाधिकभक्तानां हृदयेषु स्व स्थानं प्राप्तवती।





# बुद्धिर्बलवती सदा

- कविः - विष्णुशर्मा

प्रस्तुतोऽयं पाठः ''शुकसप्ततिः'' कथाग्रन्थस्य सम्पादन कृत्वा संगृहीतोऽस्ति। अत्र पाठांशे स्वलघुपुत्राभ्यां सह काननमार्गण पितृगृहं प्रति गच्छत्वाः बुद्धिमतीति नाम्नाः महिलायाः मतिकौशलं प्रदर्शितो वर्तते। या पुरतः समागतं हिमपि भीतिमुत्पाद्य ततः निवारयति। इयं कथा नीतिनिपुणयोः शुकसारिकयोः कथामाध्यमेन सद्वृत्तेः विकासार्थ प्रेरयति।

अस्ति देउलाख्यो ग्रामः। तत्र राजसिंहः नाम राजपुत्रः वसति स्म। एकदा केनापि आवश्यकार्येण तस्य भार्या बुद्धिमती पुत्रद्वयोपेता पितुर्गृहं प्रति चलिता। मार्गे गहनकानने सा एकं व्याघ्रं ददर्श। सा व्याघ्रमागच्छन्तं दृष्ट्वा धाष्ट्र्यात् पुत्रौ चपेटया प्रहृत्य जगाद - ''कथमेकैकशो व्याघ्रभक्षणाय कलहं कुरुथः? अयमेकस्तावद्विभज्य भुज्यताम्। पश्चाद् अन्यो द्वितीयः कश्चिल्लक्ष्यते।''

इति श्रुत्वा व्याघ्रमारी काचिदियमिति मत्वा व्याघ्रो भयाकुलचित्तो नष्टः।

निजबुद्ध्या विमुक्ता सा भयाद् व्याघ्रस्य भामिनी।
अन्योऽपि बुद्धिमाँल्लोके मुच्यते महतो भयात्।

भयाकुलं व्याघ्रं दृष्ट्वा कश्चित् धूर्तः श्रृगालः हसन्नाह - ''भवान् कुतः भयात् पलायितः?''

व्याघ्रः गच्छ, गच्छ जम्बुक! त्वमपि किञ्चिद् गूढप्रदेशम्। यतो व्याघ्रमारीति या शास्त्रे श्रूयते तयाहं हन्तुमारब्धः परं गृहीतकरजीवितो नष्टः शीघ्रं तदग्रतः।

श्रृगालः - व्याघ्र! त्वया महत्कौतुकम् अवेदितं यन्मानुषादपि बिभेषि?

व्याघ्रः - प्रत्यक्षमेव मया सात्मपुत्रवेकैकशो मामत्तुं कलहायमानौ चपेटया प्रहरन्ती दृष्टा।

जम्बुकः - स्वामिन्! यत्रास्ते सा धूर्ता तत्र गम्यताम्। व्याघ्र! तव पुनः तत्र गतस्य सा सम्मुखमपीक्षते यदि, तर्हि त्वया अहं हन्तव्यः इति।

व्याघ्रः - श्रृगाल! यदि त्वं मां मुक्त्वा यासि तदा वेलाप्यवेला स्यात्।

जम्बुकः - यदि एवं तर्हि मां निजगले बद्ध्वा चल सत्वरम्। स व्याघ्रः तथा कृत्वा काननं ययौ। श्रृगालेन सहितं पुनरायान्तं व्याघ्रं दूरात् दृष्ट्वा बुद्धिमती चिन्तितवती - जम्बुककृतोत्साहाद् व्याघ्रात् कथं मुच्यताम्? परं प्रत्युत्पन्नमतिः सा जम्बकमाक्षिपन्त्यङ्गुल्या तर्जयन्त्युवाच -

रे रे धूर्त त्वया दत्तं मह्यं व्याघ्रत्रयं पुरा।
विश्वास्याद्यैकमानीय कथं यासि वदाधुना।।
इत्युक्त्वा धाविता तूर्णं व्याघ्रमारी भयङ्करा।
व्याघ्रोऽपि सहसा नष्टः गलबद्धश्रृगालकः।।

एवं प्रकारेण बुद्धिमती व्याघ्रजाद् भयात् पुनरपि मुक्ताऽभवत्। अत एव उच्यते - बुद्धिबंलवती तन्वि सर्वकार्येषु सर्वदा।।





# तिरुप्पावै जीयर्

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - जि.विद्यावती
चरवाणी - ८६८६१३१८३३

एकदा श्रीरङ्गस्य चित्रवीथ्यां श्री रामानुजवर्यः तिरुप्पावैम् अनुसन्धानं कुर्वन् भिक्षाटनं करोति स्म। शिष्याः आचार्यम् अनुसृत्य पाशुरान् पारायणं कुर्वन्ति स्म।







तदैव पेरियनम्बेः गृहम् आगतम्। श्रीरामानुजः ''उन्दु मदगळित्त'' इति अष्टादश (१८) पाशुरम् अनुसम्धानं कुर्वन्नस्ति।







पेरियनिम्बेः पुत्रिका अत्तुळायाम्बा श्रीरामानुजं बिक्षां दातुं गृहात् बहिः आगतवती।




अहो! आचार्यवर्यः मूर्छितवन्तः।



गुरुपुत्रिका भयेन गृहस्य अन्तेगत्वा पितरं प्रति विषयम् उक्तवती।







श्रीरामानुजः सामान्यः न पुत्री! मनः बुद्धिम् एकं करोति। त्वां नीळादेवीं इति भावितः।


गच्छ पश्यावः तस्य तादात्म्यम्।


द्वौ अपि गृहात् बहिः आगतौ।
रामानुज! उत्तिष्ठतु।


रामानुजः उत्तिष्ठति। तात! इयं नीळादेवी न। मम पुत्री! भवान् पाशुरे लीनः अभवत्।


साक्षात् नीळादेवी एव आगतवती इति मन्ये.... आचार्य!


श्रीरामानुज! अद्य आरभ्य भवान् 'तिरुप्पावै जीयर्' इति नाम्ना प्रसिद्धः भविष्यति।
स्वस्ति

बा
ल
वि
नो
दि
नी

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





## रसप्रश्नाः

१. राक्षसानां कया विद्यया शुक्राचार्यः जीवयति स्म?
२.बृहस्पतेः पुत्रः कः?
३. वसुराजस्य भार्या का?
४.शकुन्तलायाः पुत्रः कः?
५.गङ्गाशन्तनयोः पुत्रः कः?
६. सुग्रीवस्य पुत्र कः?

(समाधानानि - १. मृतसञ्जीवनी २. कचः ३. गिरिका देवी ४. सर्वदमनः ५. अष्टौ६. अङ्गदः)












# तिरुमलतिरुपतिदेवस्थानानि

५

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

## लघुप्रश्नोत्तरी

१. देवव्रतः कयोः पुत्रः?
२. पाण्डुराजस्य पत्न्यौ के?
३. माद्र्याः पुत्रौ कौ?
४. कः भीष्मस्य स्वच्छन्दमरणवरं दत्तवान्?
५. ब्रह्मर्षयः शत्रयागं कुत्र आयोजितवन्तः?
६. शौनकादि मुनीनां कः महाभातरकथाश्रवणं अकरोत्?
७. महाभारत रचनाकालः कति वत्सराः अभवत्?
८. कुरुवंशस्य मूलपुरुषः कः?
९. दुष्यन्तः कस्य वंशीयः?
१०. दुष्यन्तस्य पिता कः?
११. कृपाचार्यस्य सोदरी का?
१२. द्रोणस्य प्रिय शिष्यः कः?
१३. विवाहात् पूर्वं जातं पुत्रं किं वदन्ति?
१४. पाण्डुराजं कः शशाप?
१५. राक्षसाणां गुरुः कः?

## समाधानानि

१.
२.
३.
४.
५.
६.
७.
८.
९.
१०.
११.
१२.
१३.
१४.
१५.

## नियमावलिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः **(Xerox)** नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः **(Subsribers)** भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं **DIP** द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. **Chief Editor** कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।



| | | | |
|---|---|---|---|
| Subscription Number | : | Address | : |
| Name | : | | |
| Mother | : | | |
| Father | : | Phone Number | : |



Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-11-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

# गीता जयन्तिः

(०४-१२-२०२२)